कृत्वसो हुत्तमित्यन्ये । देशी शब्दः स इष्यते ।
सअहुत्तं । सहसहुत्तं ॥
जातौ वा स्वार्थिकः कः ।
जातौ स्वार्थे ककारः प्रयोक्तव्यः ॥ ]

॥ विद्युत्पीताभ्यां लः[51] ॥ २६ ॥

विद्युत्पीतशब्दाभ्यां परतः स्वार्थे लप्रत्ययो भवति[59] ॥ विज्जू । विज्जुली ॥ पीअं । पीअलं ॥

[ ॥ वृंदे वो वः[60] ॥ २७ ॥ ]

वृंदशब्दे वकारात्परः[61] स्वार्थे रेफो वा प्रयोक्तव्यः ॥ व्रंदं । वंदं[62] ॥

॥ करेण्वां रणोः स्थितिपरिवृत्तिः ॥ २८ ॥

करेणुशब्दे रेफणकारयोः स्थितिपरिवृत्तिर्भवति ॥ कणेरू ॥ पुंसि[63] न भवति ॥ करेणू ॥

॥ आलाने लनोः ॥ २९ ॥

आलानशब्दे लकारनकारयोर्हल्मात्रयोः स्थितिपरिवृत्तिर्भवति ॥ आणालखंभो[64] ॥

found in AC, and has been conjecturally restored by the help of the corresponding passages in Hema-ch., and the Prákṛta Sanjívaní. It seems ( with the exception of the last two lines ) to be in verse, with examples interposed, and as such to be quoted at the end of the Comm. to sútra 25, but it will be further discussed in the Appendix. 58 BDEW here recommence; DE add वा ; W has विद्युत्पीतादिभ्यो लः, adding as new examples सामलो दीहलो सोअलं. 59 DE add वा, and it is supplied in the margin of A. 60 This sútra not in ABC. 61 W -परस्य. 62 W वृंदं विंदं. 63 DW add करेणवामिति स्त्रीलिंगनिर्देशात्. 64 *Cf.* iii. 57.

॥ बृहस्पतौ बहोर्भओ[65] ॥३९ ॥

बृहस्पतिशब्दे बकारहकारयोर्यथासंख्यं भकारअकारौ भवतः ॥ भअप्फई[66] ॥

॥ मलिने लिनोरिलौ[67] वा ॥ ३१ ॥

मलिनशब्दे लिकारनकारयोर्यथासंख्यमिकारलकारौ वा भवतः ॥ मइलं । मलिणं ॥

॥ गृहे घरोऽपतौ ॥ ३२ ॥

गृहशब्दे घर इत्ययमादेशो भवति । पतिशब्दे परतो न भवति ॥ घरं भवनं ॥ अपताविति किं ॥ गहवई ॥

॥ दाढादयो[68] बहुलं ॥ ३६ ॥

दाढा इत्येवमादयः शब्दा बहुलं निपात्यन्ते दंष्ट्रादिषु ॥ दंष्ट्रा । दाढा ॥ इदानीं । एण्हिं[69] ॥ दुहिता । धीआ धूदा[70] ॥ चातुर्यं । चातुलिअं[71] ॥ मंडुकः । मंडूरो[72] ॥ गृहे निहितं । घरे णिहितं[73] ॥ उत्पलं । फंदोट्टो[74] ॥ गोदावरी । गोला ॥ ललाटं । णिडालं[75] ॥ भूः । भुमआ[76] ॥ वैदूर्यं । वेलुरिअं[77] ॥ उभयपार्श्वं । अवहोवासं ॥

65 A भअः 66 BW-प्फई. 67 AB इल वा. 68 So DW and probably A ; B has been correted from ठ to ढ ; several variations occur in the examples of this sútra : *cf.* Sanksh. Sára, 162, 165. 69 BCE एएहीं ; D एएही. 70 A only दिधी ; B धिया दिट्ठी ; W enly धूआ. 71 Altered in A *n.l.* ; C चाउ-. 72 Altered in A to मंडूओ ; B *n.l.* ; DE मड्डो. 73 AB णिहिलं (B altered to -तं ). 74 A -ट्ट (?) ; W -ट्टं. 75 A णिडालं ; D टे- . W adds another form ण्डालं ; AC end here. 76 WE भुमआ ; DED give Sans. भ्रू ; *cf.* Sanksh. Sára, 162. 77 B वेलिरिअं.

चूतः। माइंदो माअंदो[78] ॥ आदिशब्दोऽयं प्रकारे[79]। तेन सर्वे एव देशसंकेतप्रवृत्तभाषाशब्दाः परिगृहीताः ॥

॥ इति वररुचिकृते प्राकृतप्रकाशे संकीर्णविधिर्नाम चतुर्थः परिच्छेदः ॥

78 W मरिंदो मअंदो ; W has besides as new examples, प्रत्यूषः। गोसो ॥ कांतः। ललहो ॥ कवलः। खेघर ॥ कर्कटी। वालुकी ॥ चिंता। तत्तिं 79 D adds प्रकारः सादृश्यं.

॥ अथ पंचम परिच्छेद ॥

॥ अत ओत्सो ॥ १ ॥

अकारांताच्छब्दात्परस्य सोः स्थाने ओत्वं भवति ॥ वच्छो। वसहो। पुरिसो[1] ॥ वृक्ष.[2]। वृषभः। पुरुषः ॥

॥ जश्शसोर्लोपः ॥ २ ॥

अत इत्यनुवर्तते। अकारांतस्यानंतर यौ जश्शसौ तयोर्लोपो भवति ॥ वच्छा सोहंति। वृक्षाः शोभंते। जश्शस्ङस्यांसु[3] दीर्घ इति दीर्घे कृते पश्चाल्लोपो जसः।

वच्छे णिअच्छह[4]। वृक्षान्नियच्छत[5] ॥ एच सुपि[6] इत्येत्वे कृते शसो लोपः ॥

॥ अतोऽमः ॥ ३ ॥

अकारांतस्यानंतरं यो ऽम् द्वितीयैकवचन तदकारस्य लोपो भवति। वच्छ पेक्खइ। मो विंदुरिति विंदुः ॥

॥ टामोर्णः ॥ ४ ॥

अतो ऽनतरं टामोस्तृतीयैकवचनषष्ठीबहुवचनयोर्णकारो भवति ॥ वच्छेन। वच्छाण[7]। एच सुपीत्येत्वं। जश्शस्ङस्यांसु[8] दीर्घ इति दीर्घ ॥

॥ भिसो[9] हि ॥ ५ ॥

अतोऽनतरस्य भिसो हि भवति ॥ वच्छेहिं ॥ एच सुपि इत्येत्वं ॥

1 D adds हरिसो = हर्ष, and quotes iv, 1 2 D generally has वत्स 3 BE जसङसासु, D जसभ्यमङसासु, *cf* v, 11 4 W उवह = परयत 5 Deest in A 6 *cf* v, 12. 7 B -ए 8 D जसशसभ्यसङसासु, E जशम्सासु, B om 9 This sutra not in B

॥ ङसेरादोदुहयः ॥ ६ ॥

अतो ऽनंतरस्य ङसेः पंचम्येकवचनस्य स्थाने आ दो दु हि इत्येत आदेशा भवंति ॥ वच्छा । वच्छादो । वच्छादु । वच्छाहि ॥ जश्शस्ङस्यासु[10] दीर्घत्वं ॥

॥ भ्यसो हिंतो सुंतो ॥ ७ ॥

अतो ऽनंतरस्य भ्यसो हिंतो सुंतो इत्येतावादेशौ भवतः ॥ वच्छाहिंतो । वच्छासुंतो ॥ एत्व सुपि इति चकारेण दीर्घत्वं ॥

॥ स्सो ङसः ॥ ८ ॥

अतो ऽनंतरस्य ङसः स्स इत्यादेशो भवति ॥ वच्छस्स ॥

॥ ङेरेम्मी[11] ॥ ९ ॥

अतो ऽनंतरस्य ङेः ए म्मि इत्यादेशौ भवतः ॥ वच्छे । क्वचिद् ङसिङयोर्लोपः[12] ॥ वच्छम्मि ॥

॥ सुपः सुः[13] ॥ १० ॥

अतो ऽनंतरस्य सुपः सुंइत्यादेशो भवति ॥ वच्छेसु । एत्व सुपि इत्येत्वं ॥

॥ जश्शस्ङस्यांसु[14] दीर्घः ॥ ११ ॥

जसादिषु परतो ऽतो दीर्घो भवति ॥ वच्छा सोहंति[15] । जश्शसोर्लोप इति जसो लोपः ॥ वच्छादो[16] आगदो । वच्छादु । वच्छाहि ॥ ङसेरादोदुहयः ॥ वच्छाण ॥ टामोर्णः ॥

10 B जसृङस्यांसु ; D as in p. 39, note 3 ; E as in p. 39, note 8. 11 W ङेरेम्मि. 12 cf. v., 13 ; DW add इत्सकारलोपः (not in E). 13 A सु ; E सुं. 14 B corrupt ; D जसभ्यसङस्यांसु ; E जसङम्यांसु. 15 Only W has an ex. of शस्, *i e.*, वच्छे, adding अत्र प्रथमं दीर्घस्तत एत्वं ततो लोपः. 16 Only EW add वच्छा.

॥ एच्च सुप्यङिङसोः ॥ १२ ॥

अत अकारस्यैत्वं भवति सुपि परतो ङिङसौ वर्जयित्वा[17]। चकाराद्दीर्घश्च[18] ॥ वच्छे पेक्खह ॥ जश्शसोर्लोपः ॥ वच्छेण। टामोर्णः ॥ वच्छेहिं ॥ वच्छेसु ॥

चकाराद्दीर्घश्चेति ॥ वच्छाहिंतो वच्छासुंतो ॥ भ्यसो हिंतो सुंतो ॥

अङिङसोरिति किं ॥ वच्छम्मि। वच्छस्स ॥

॥ क्वचिद्ङसिङ्योर्लोपः ॥ १३ ॥

अतो[19]ङसि ङि इत्येतयोः परतः[20] क्वचिल्लोपो भवति ॥ वच्छा[21] आगदो। ङसेरादोदुहय इति ॥ वच्छे ठिअं। ङेरेम्मोत्येत्वं ॥

॥ इदुतोः शसो णो ॥ १४ ॥

इदुदंतयोः शसो णो भवति ॥ अग्गिणो[22] पेक्खह[23]। वाउणो पेक्ख ॥

॥ ङसो वा ॥ १५ ॥

इदुदंतयोर्ङसो वा णो भवति ॥ अग्गिणो। अग्गिस्स ॥ वाउणो। वाउस ॥ अग्नेः। वायोः ॥

॥ जसश्च ओ[24] यूत्वं[25] ॥ १६ ॥

इदुदंतयोर्जस ओकारादेशो भवति। इदुतोश्च ईऊत्वं वा। चकाराद् णोच ॥ अग्गीओ। वाऊओ ॥ अग्गिणो। वाउणो ॥

17 सुपि—त्वा not in AB. 18 W चकाराद्दीर्घो भ्यसि. 19 DE अकारस्य. 20 E परयोः. 21 D वच्छा, ABW वच्छादो, E has both. 22 W अग्गीणो and वाऊणो. 23 The MSS. here and elsewhere vary between पेछ and पेक्ख 24 वा inserted in margin of ABD. 25 W has two sútras for s. 16, *i.e.*, two various readings of the same, with distinct commentaries जस ओ णो वाऽत्वं यूत्वंच ॥ इदुदंतयोः शब्दयोर्जस ओणो इत्यादेशौ भवतः। जत्वं इत्वं ऊत्वंच विकल्पेन। चकारात्णोऽपि। पक्षे अदंतवात् ॥ अग्गीओ

॥ टा णा ॥ १७ ॥

इदुदंतयोष्टाविभक्तेः णा इत्ययमादेशो भवति ॥ अग्गिणा। वाउणा ॥

॥ सुभिस्सुप्सु दीर्घः ॥ १८ ॥

इदुदंतयोः सु भिस् सुप् इत्येतेषु दीर्घो भवति ॥

सु ॥ अग्गी। वाऊ ॥ भिस् ॥ अग्गीहिं ॥ वाऊहिं ॥ सुप् ॥ अग्गीसु। वाऊसु ॥

॥ स्त्रियां शस उदोतौ[26] ॥ १९ ॥

स्त्रियां वर्तमानस्य शस उत् ओत् इत्येतावादेशौ भवतः॥ मालाउ मालाओ। णईउ णईओ। बहुउ बहुओ ॥

[ ॥ जसो वा[27] ॥ २० ॥ ]

जसः स्त्रियां उत् ओत् इत्येतावादेशौ वा भवतः। पक्षे अदंतवत् ॥ मालाउ। मालाओ। माला[28] ॥

॥ अमि ह्रस्वः ॥ २१ ॥

अमि परतः स्त्रियां ह्रस्वो भवति ॥ मालं। णइं। वहुं ॥

॥ टाङस्ङीनामिदेददातः[29] ॥ २२ ॥

टा ङस् ङि इत्येतेषां स्त्रियां इत् एत् अत् आत् इत्येत आदेशा भवंति ॥

टा ॥ णाईइ। णईए। णईअ। णईआ कअं ॥ ङस् ॥ णाईइ। णाईए। णाईअ। णाईआ चम्मं ॥ ङि ॥ णाईइ। णईअ। णाईअ। णाईआ ठिअं ॥

अग्गीवो अग्गिणो अग्गओ अग्गनो अग्गी। वाऊओ etc.: then follows जसश्च ओ पुर्वं. 26 W स्त्रियां जश्शसोरुदोतौ. 27 This sútra is only found in BDE (D erroneouly इसो वा both in sút. and Comm.) and in the Prák. Sanj. 27 So E; B मालाइ; D मालस्स मालाई. 29 W टाङसिङसुङीनामि-.

॥ नातो ऽद्याती ॥ २३ ॥

आत आकारांतस्य स्त्रीलिंगस्यानंतरं टाङस्ङीनां[30] अत् आत् इत्येतावादेशौ न भवतः । पूर्वेण प्राप्तो निषिध्यते ॥ मालाइ मालाए । कअं । धणं । ठिअं ॥

॥ आदीतौ[31] बहुलं ॥ २४ ॥

स्त्रियामाकारांतादातः स्थाने आत् ईत् इत्येतौ बहुलं प्रयोक्तव्यौ ॥ सहमाणा सहमाणी[32] । हलद्दा हलद्दी । सुप्पणहा सुप्पणही । छाहा छाही[33] ॥

॥ न नपुंसके[34] ॥ २५ ॥

प्रथमैकवचने नपुंसके दीर्घत्वं न भवति । सौ दीर्घः पूर्वस्येत्यनेन इदुदंतयोः प्राप्तं पूर्वस्य दीर्घत्वं न नपुंसके इत्यनेन बाध्यते[35] ॥ दहिं महुं । हविं ॥ दधि । मधु । हविः ॥

॥ इञ्जश्शसोर्दीर्घश्च ॥ २६ ॥

नपुंसके वर्तमानयोर्जश्शसोः स्थान ईदादेशो भवति पूर्वस्यच[36] दीर्घः ॥ वणाइ । दहीइ । महुइ ॥

30 W as before; the कअं etc. are used to imply the inst. gen. and loc. cases, *i.e.*, कृतं धनं स्थितं. 31 A आदित्तौ; B अदित्तौ; in the Comm. A has the same, B अत् (originally आत्) and ईत्. 32 AB have only this ex. 33 W then adds another sút. (s. 25) यत्तत्किमः ॥ बहूलमित्यनुवर्तते । यत्तत्किम् इत्येतेषु परतः आतः स्थान ईत्ययमादेशो भवति । स्त्रियामित्यनुवर्तते । प्रथमैकवचनवर्जं । ए आदेशश्च बहूलवचनात् ॥ जीए तीए कीए जीहिं तीहिं कीहिं । पक्षे जाए ताए काए जाहिं ताहिं काहिं ॥ यस्याः तस्याः कस्याः याभिः ताभिः काभिः D adds the six examples of the genitive to the preceding sútra; *cf.* vi., 6. 34 W adds सौ दीर्घः पूर्वस्य. 35 सौ—बाध्यते given from DE (*cf.* S. 18); ABW *om.* and add धणं वणं in the ex. 36 AB *only* दीर्घश्च.

॥ नामंत्रणे सावोत्वदीर्घबिंदवः[37] ॥ २७ ॥

आमंत्रणे गम्यमाने सौ परत ओत्वदीर्घबिंदवो न भवंति। अत ओत्सोरित्योत्वं प्राप्तं। सुभिस्सुप्सु दीर्घ इति दीर्घः। सोर्बिंदुर्नपुंसक इतिबिंदुर्प्राप्तः॥ हे वच्छ[38]। हे अग्गि। हे वाउ। हे वण। हे दहि। हे महु॥

॥ स्त्रियामात एत्॥ २८ ॥

स्त्रियामामंत्रणे आतः स्थाने एत्वं भवति सौ परतः॥ हे माले। हे साले॥ अत्यस्य हल इति सोर्लोपः[39]॥

॥ ईदूतोर्ह्रस्वः॥ २९॥

आमंत्रणे ईदूतोर्ह्रस्वो[40] भवति॥ हे णइ। हे वहू॥

॥ सोर्बिंदुर्नपुंसके[41]॥ ३०॥

नपुंसके वर्तमानस्य सोर्बिंदुर्भवति॥ वणं। दहिं। महुं॥

॥ ऋत आरः सुपि[42] ॥ ३१॥

ऋकारांतस्य सुपि परत आर इत्यादेशो भवति॥ भत्तारो सोहइ। भत्तारं पेक्खसु। भत्तारेण कअं॥

॥ मातुरात्॥ ३२॥

मातृसंबंधिन ऋकारस्याकारो भवति॥ माआ सोहइ। माअं पेक्खसु। माआइ कअं। माआए॥

॥ उजश्शस्टाङस्सुप्सु वा[43] ॥ ३३॥

जश्शस्टाङस्सुप्सु परत ऋकारस्य स्थाने उकारादेशो भवति वा[44]॥

37 W सो. 38 AB om. masc. ex. 39 *cf.* iv., 6. 40 W adds स्त्रिया. 41 W puts s. 30 after s. 26. 42 B स by mistake. 43 W उश्च जश्शस्टाङसिङस्सु वा and transposes sútras 32, 33. 44 The examples in AB are rather obscure, and the forms from भत्तार are only fully given in DE.

जस्। भत्तुणो भत्तारा ॥ शस्। भत्तुणो[45] भत्तारे ॥ टा[46]। भत्तुणा भत्तारेण ॥ ङस्। भत्तुणो भत्तारस्स[47] ॥ सुप्। भत्तूसु[48] भत्तारेसु ॥ आरादिः पूर्ववत् ॥

॥ पितृभ्रातृजामातॄणामरः ॥ ३४ ।

पित्रादीनां सुपि परत ऋतोऽरो भवति। आरापवादः ॥ पिअरं पिअरेण। भाअरं भाअरेण। जामाअरं जामाअरेण ॥

॥ आच सौ[49] ॥ ३५ ॥

पित्रादीनामाकारो भवतिसौ परतः ॥ चकारादरश्च ॥ पिआ पिअरो। भाआ भाअरो। जामाआ जामाअरो ॥

[ ॥ राज्ञश्च[50] ॥ ३६ ॥ ]

राजन्शब्दस्य आ इत्ययमादेशो भवति सौ परतः ॥ राआ ॥

[ ॥ आमंत्रणे वा विंदुः ॥ ३७ ॥ ]

राजन्शब्दस्य आमंत्रणे वा विंदुः स्यात् ॥ हे राअं। हे राअ ॥

[ ॥ जश्शस्ङसां णो ॥ ३८ ॥ ]

राज्ञ उत्तरेषां जस् शस् ङस् इत्येतेषां णो इत्ययमादेशो भवति ॥ राआणो पेक्खति। राआणो पेक्ख। राइणो धणं। रण्णो धणं ॥

[ ॥ शस ए ॥ ३९ ॥ ]

राज्ञ परस्य शस ए इत्ययमादेशो भवति ॥ राए पेक्ख। राआणो पेक्ख ॥

[ ॥ आमो णं[51] ॥ ४० ॥ ]

राज्ञ उत्तरस्यामः षष्ठीबहुवचनस्य णं इत्ययमादेशो भवति ॥

45 W भत्तुो, A om 46 A ए, but C टा. 47 D (not E) भत्तुस. 48 A भत्तुसु (?) 49 D श्राच 50 These *sūtras* on *rājan* (s 36—44) are only found in DEW; W has a few variations, DE agree. 51 W puts S 40 after S. 43.

राआणं ॥

[ ॥ टा णा ॥ ४१ ॥ ]

राज्ञ उत्तरस्याः टाविभक्तेः णा इत्ययमादेशः स्यात् ॥ राइणा ॥

[ ॥ ङसश्च द्वित्वं वांत्यलोपश्च[52] ॥ ४२ ॥ ]

राज्ञ उत्तरस्य ङसादेशस्य टादेशस्यच वा विकल्पेन द्वित्वं भवति । अंत्यस्यच लोपः ॥ रण्णो राण्णो धणं ॥ राइणा रण्णा कअं ॥

[ ॥ इदद्वित्वे ॥ ४३ ॥ ]

वेति निवृत्तं। ङसादेशस्य टादेशस्यच अकृते द्वित्वे राज्ञ इत्वं भवति ॥ राइणो राइणा ॥ कृते द्वित्वे॰ त्वित्वं न भवति ॥ रण्णो रण्णा ॥

[ ॥ आ णोणमोरङसि[53] ॥ ४४ ॥ ]

णोणमोः परयोः राज्ञो जकारस्य आकारादेशः स्यात् । अङसि पष्ट्येकवचने न भवति ॥ राआणो पेक्खति । राआणो पेक्ख । राआणं धणं ॥ अङसीति किं ॥ राइणो रण्णो धणं ॥ शेषमदंतवत् ॥ राअं । राएहिं । राआ राआदो राआदु । राआहिंतो राआसुंतो । राअम्मि राए राएसु ॥ राजानं । राजभिः । राज्ञः । राजभ्यः । राज्ञि । राजसु ॥

॥ आत्मनो ऽप्पाणो वा ॥ ४५ ॥

आत्मनो ऽप्पाण इत्यादेशो भवति ॥ अप्पा[54] । अप्पाणो ॥

[ इत्वद्वित्ववर्जं राजवदनादेशे[55] ॥ ४६ ॥

आत्मनो ऽनादेशे राजवत् कार्यं स्यादित्वद्वित्वे वर्जयित्वा ॥ अप्पा । अप्पाणो । अप्पणा । अप्पणो ॥ आत्मा । आत्मानः । आत्मना । आत्मनः ॥

52 W जलोपो वा. 53 W णोणयोरादङसि. 54 *cf.* iii., 48.
55 This sútra is only found in DEW. ; W adds the forms अत्ता अत्ताणो.

॥ ब्रह्माद्या आत्मवत् ॥ ४७ ॥

ब्रह्माद्याः शब्दा लक्ष्याणुसारेणात्मवत् साधवो भवंति ॥ बम्हा बम्हाणो ॥ जुवा जुवाणो । अद्धा अद्धाणो[56] ॥ ब्रह्मन् । युवन् । अध्वन् एवमादयो लक्ष्याणुसारेणानुगंतव्याः ॥

॥ इति वररुचिकृते प्राकृतप्रकाशे लिंगविभक्त्यादेशः पंचमः परिच्छेदः ॥

56 ACW आनद्धा आणद्धाणो ; A om. Sans. ; W explains it by अनड्वाह् ; B *n.l.*

॥ अथ षष्ठः परिच्छेदः ॥

॥ सर्वादेर्जस एत्वं ॥ १ ॥

सर्वादेरुत्तरस्य जस एत्वं भवति । ॥ सव्वे । जे । ते । के । कदरे ॥ सर्वे । ये । ते । के । कतरे ॥

॥ ङेः स्सिंम्मित्थाः[1] ॥ २ ॥

ङेः सप्तम्येकवचनस्य सर्वादिपरस्थितस्य स्थाने स्सिं[2] म्मि त्थ इत्येत आदेशा भवंति ॥ सव्वस्सिं । सव्वम्मि । सव्वत्थ[3] ॥ इअरस्सिं[4] । इअरम्मि इअरत्थ[5] ॥ सर्वस्मिन् । इतरस्मिन् ॥

॥ इदमेतत्किंयत्तद्भ्यष्टा इणा वा ॥ ३ ॥

इदं । एतत् । किं । यत् । तत् । इत्येतेभ्यः टा इत्यस्य इणादेशो भवति वा ॥ इमिणा । एदिणा । किणा । जिणा । तिणा[6] ॥ पक्षे । इमेण । एदेण । केण । जेण । तेण ॥ अनेन । एतेन । केन । येन । तेन ॥

॥ आम एसिं ॥ ४ ॥

इदमादिभ्य उत्तरस्य आम एसिं इत्ययमादेशो वा भवति ॥ इमेसिं इमाण[7] । एदेसिं एदाण । केसिं काण । जेसिं जाण । तेसिं ताण[8] ॥

॥ किंयत्तद्भ्यो ङस आसः ॥ ५ ॥

1 ABW स्सि for स्सं. 2 ABW स्सि, but all have सव्वस्सिं; *cf.* S. 15. 3 A -त्था. 4 B -स्सि. 5 A -त्था. 6 So BD and Hema-ch, ; AW कइणा जइणा तइणा. 7 A -णा for -ण in these second forms; B -णं. 8 W adds स्त्रीलिंगे ऽप्येतानि रूपाणि ॥ इमासिं । एदासिं । कासिं । जासिं । तासिं ॥

किं। यत्। तत्। एभ्य उत्तरस्य ङस आस इत्ययमादेशो भवति वा ॥ कास। कस्स ॥ जास। जस्स ॥ तास। तस्स ॥

॥ इद्भ्यः स्सा से[9] ॥ ६ ॥

इकारांतेभ्यः किमादिभ्य उत्तरस्य ङसः स्सा से इत्येतावादेशौ भवतः ॥ किस्सा। कीसे। कीआ। कीए। कीअ। कीइ[10] ॥ जिस्सा। जीसे। जीआ। जीए। जीअ। जीइ ॥ तिस्सा। तीसे। तीआ। तीए। तीअ। तीइ ॥

॥ ङेर्हिं ॥ ७ ॥

किमादिभ्य उत्तरस्य ङेः हिं इत्ययमादेशो भवति वा ॥ कहिं। कस्सिं। कम्मि। कत्थ ॥ जहिं। जस्सिं। जम्मि। जत्थ ॥ तहिं। तस्सिं। तम्मि। तत्थ ॥

॥ आहे इआ काले ॥ ८ ॥

किंयत्तद्भ्यो ङेः काले आहे इआ इत्यादेशौ वा भवतः ॥ काहे। जाहे। ताहे ॥ कइआ[11]। जइआ। तइआ ॥ कहिं इत्यादयोऽपि ॥ कदा। यदा। तदा ॥

॥ त्तो[12] दो ङसेः ॥ ९ ॥

किंयत्तद्भ्यो ङसेः त्तो दो इत्येतावादेशौ भवतः ॥ कत्तो। कदो ॥ जत्तो। जदो ॥ तत्तो। तदो ॥

॥ तद ओघ्य[13] ॥ १० ॥

9 W reads S. 6, ङसः स्सासो स्त्रियां ॥ इकारांतेभ्यश्चाकारांतेभ्यश्च स्त्रियां किमादिभ्य उत्तरस्य ङसः स्सा सो '*ityādeśau vā bhavataḥ*'; etc., after the ex. it adds ङस्ग्रहणेन ङसिरपिग्रहणं' ( *cf.* v., 22, var. lect. ) *cf.* Lass. Inst., p. 321—3. 10 BW कीई, and similarly जीई तीई. 11 B कईआ etc. 12 BD त्तो for त्तो, and similarly in Comm. 13 W तद तय.

तद् उत्तरस्य ङसेरोकारादेशो[14] भवति वा ॥ तो[15] । तत्तो । तदो ॥

॥ ङसा से ॥ ११ ॥

वेति वर्तते । तदो ङसा सह से इत्ययमादेशो भवति । पक्षे यथाप्राप्तं ॥ से । तास । तस्स[16] ॥

॥ आमा सिं ॥ १२ ॥

तद् आमा सह सिं इत्ययमादेशो वा[17] भवति ॥ सिं । ताण[18] ॥ तेषां तासां ॥

॥ किम· कः ॥ १३ ॥

किंशब्दस्य सुपि परतः क इत्ययमादेशो भवति ॥ को । के । केण । केहिं[19] ॥

॥ इदम इमः ॥ १४ ॥

सुपि परत इदम इम इत्ययमादेशो भवति[20] ॥ इमो । इमे । इमं । इमेण । इमेहिं ॥

॥ स्सस्सिमोरद्धा[21] ॥ १५ ॥

स्सस्सिमोः परत इदमो ऽद्भादेशो भवति ॥ अस्स । इमस्स[22] ॥ अस्सिं[23] इमस्सिं[24] ॥

॥ ङेर्मेन हः ॥ १६ ॥

14 AW उकार-. 15 A om.; W तउ; for cf. s. 20; Hema-ch. also gives it, and it is found in the Setubandha; see Höfer, Zeitsch., p. 517. 16 A om. Sans.; BD add तस्य तस्याः (for से?); W adds स्त्रियामपि से तिस्सा । इत्थमद्दणे इमिमदण्ण से तत्तो. 17 Only in DW. 18 So BDE (B ताण); A सिं ताणा; W सिं ताण तेसिं; Hema-ch. also has सिं. 19 AB कहिं 20 DW add वा; B confuses sútras 14, 15. 21 W सम्मिमोरद्धा. 22 A इमस्स. 23 W अम्मि (अस्सिं in s. 16.) 24 A इदमस्सिं, but not so in S. 16.

इदमो दकारेण सह ङेः स्थाने हकारादेशो वा[25] भवति ॥ इह ॥ पक्षे । अस्सिं । इमस्सिं । इमम्मि ॥

॥ न त्थः ॥ १७ ॥

इदमः परस्य ङेः त्थ इत्ययमादेशो न भवति ॥ ङेः स्सिंम्मित्था इति प्राप्ते प्रतिषिध्यते ॥ इह । अस्सिं । इमस्सिं । इमम्मि ॥

॥ नपुंसके स्वमोरिदमिणमिणमो ॥ १८ ॥

नपुंसकलिंगे इदमः स्वमोः परतः सविभक्तिकस्य इदं इणं इणमो इत्येते त्रय आदेशा भवंति ॥ इदं । इणं । इणमो[26] धणं ॥

॥ एतदः सावोत्वं वा ॥ १९ ॥

एतच्छब्दस्य सौ परत ओत्वं वा भवति ॥ नित्ये प्राप्ते विकल्प्यते ॥ एस[27] । एसो ॥ एषः ॥

॥ त्तो[28] ङसेः ॥ २० ॥

एतदः परस्य ङसेः त्तो इत्ययमादेशो भवति ॥ एत्तो[29] । एदादो । एदादु । एदाहि ॥ एतस्मात् ॥

॥ त्तोत्थयोस्तलोपः[30] ॥ २१ ॥

एतदस्तकारस्य त्तोत्थयोः परतो लोपो भवति ॥ एत्तो[31] । एत्थ ॥

॥ तदेतदोः सः सावनपुंसके ॥ २२ ॥

तच्छब्दस्य एतच्छब्दस्य यस्तकारः तस्य सकारादेशो भवति अनपुंसके सौ परतः ॥ सो पुरिसो । सा महिला । एस । एसो । एसा ॥ साविति[32] किं ॥ एदे । ते । एदं । तं ॥ अनपुंसक इति किं ॥ तं एदं धणं ॥

॥ अदसो दो मुः[33] ॥ २३ ॥

25 Added from DW. 26 A इणमं. 27 A एगा (?); W has as an ex. एदो एदं = एतत्. 28 DW त्तो. 29 BD (not W) एत्तो. 30 DW त्तो-. 31 D एत्तो; for these *cf.* Lass., p. 129. 32 साविति किं and its examples not in A. 33 A मू; B मूः.

अदसो दकारस्य सुपि परतो मु[34] इत्ययमादेशो भवति ॥ अमू पुरिसो। अमू महिला। अमूओ[35] पुरिसा। अमूओ[36] महिलाओ। अमु[37] वणं। अमूइं वणाइं ॥

॥ ह्रश्च सौ[38] ॥ २४ ॥

अदसो दकारस्य सौ परतो हकारादेशो भवति ॥ अह[39] पुरिसो। अह महिला। अह वणं ॥ हादेशो ऽयमोत्वात्वबिंदून् त्रिष्वपि लिंगेषु परत्वाद्बाधते ॥

॥ पदस्य ॥ २५ ॥

अधिकारो ऽयं। आशब्दविधानात्। यदित ऊर्ध्वमनुक्रमिष्यामः पदस्य तद्भवतीत्येवं वेदितव्यं। तच्च तत्रैवोदाहरिष्यामः ॥

॥ युष्मदस्तं तुमं[40] ॥ २६ ॥

सावित्येव। युष्मदः पदस्य सौ परतः तं तुमं इत्येतावादेशौ भवतः ॥ तं आगदो। तुमं आगदो ॥

॥ तुं चामि[41] ॥ २७ ॥

युष्मदः पदस्य अमि परतः तुं इत्यादेशो वा भवति। तुमंच[42] ॥ तुं पेक्खामि। तुमं पेक्खामि ॥

॥ तुज्झे तुम्हे[43] जसि ॥ २८ ॥

34 AB मू. 35 So DE ; A om. ; B अमूणो ; W असूउ. 36 W अमूउ. 37 B अमू. 38 *cf.* Lass. Inst., p. 327. 39 B अहं throughout. 40 DE युष्मदस्तुं तुवं and similarly in Comm. 41 ABC त्तंचामि ; DE त्तंचामि ; W ( and the Prákr. Sanjív. ) तुंचामि ;—if त्तं be correct, it must be the enclitic form (*cf.* Lass. Inst., p. 328) but it is probably a mistake for तुं in copying from an MS in the Bengalî character. 42 W. तं तुमंच ; DE seem to give तुमंच as a new sútra, and add to this in its Comm. चकारात् तुं तुवंच. 43 MSS. ह्म here in the

युष्मदः पदस्य जसि परतः तुज्झे तुम्हे इत्येतावादेशौ भवतः ॥ तुज्झे आगदा तुम्हे आगदा ॥

॥ वोच शसि ॥ २९ ॥

शसि युष्मदः पदस्य वो इत्यादेशो भवति। चकारात् तुज्झे तुम्हे च ॥ वो पेच्छामि ॥ तुज्झे तुम्हे पेच्छामि ॥

॥ टाङ्योस्तइ तए तुमए तुमे ॥ ३० ॥

युष्मदुत्तरयोः टा ङि इत्येतयोः तइ तए तुमए तुमे इत्येत आदेशा भवंति ॥ टा ॥ तइ तए तुमए तुमे कअं ॥ ङि ॥ तइ तए तुमए तुमे ठिअं ॥

॥ ङसि तुमोतुद्दतुज्झतुम्हतुम्माः[44] ॥ ३१ ॥

युष्मदः पदस्य ङसि तुमो तुद्द तुज्झ तुम्ह तुम्म इत्येत आदेशा भवंति ॥ तुमो पदं। तुद्द तुज्झ तुम्ह तुम्म पदं ॥

॥ आङि च ते दे ॥ ३२ ॥

आङि तृतीयैकवचने चकाराद् ङसि च परतो युष्मदः पदस्य ते दे इत्येतावादेशौ भवतः ॥ ते कअं। दे कअं ॥ ते धणं। दे धणं ॥

॥ तुमाइ च ॥ ३३ ॥

आङि युष्मदः पदस्य तुमाइ इत्ययमादेशो भवति[45] ॥ तुमाइ कअं ॥

॥ तुज्झेहिं तुम्हेहिं तुम्मेहिं[46] भिसि ॥ ३४ ॥

भिसि परतो युष्मदः पदस्य तुज्झेहिं तुम्हेहिं तुम्मेहिं इत्येत आदेशा भवंति ॥ तुज्झेहिं तुम्हेहिं तुम्मेहिं कअं ॥

following sútras D generally has म्ह, the other MSS. ह्म (cf. iii., 8); W generally writes ह्म for ज्झ. 44 तुम्म plain in CEW; AB not clear, except in one ex.; D reads तुम्म, corrected in the margin to तुम्म; only D has तुन्द, the others तुद्द. 45 W adds चकारात् इति च. 46 So MSS. plainly; D as

॥ ङसौ तत्तो तइत्तो[47] तुमादो तुमादु तुमाहि[48] ॥ ३५ ॥

ङसौ परतो युष्मदः पदस्य तत्तो तइत्तो तुमादो तुमादु तुमाहि इत्येत आदेशा भवंति ॥ तत्तो आगदो । तइत्तो तुमादो तुमादु तुमाहि आगदो ॥ त्वदागतः ॥ [1]

॥ तुम्हाहिंतो तुम्हासुंतो भ्यसि ॥ ३६ ॥

युष्मदः पदस्य पंचमीबहुवचने भ्यसि तुम्हाहिंतो तुम्हासुंतो इत्येतावादेशौ भवतः ॥ तुम्हाहिंतो तुम्हासुंतो आगदो ॥

॥ वो भे तुज्झाणं तुम्हाणमामि[49] ॥ ३७ ॥

आमि परतो युष्मदः पदस्य वो भे तुज्झाणं तुम्हाणं इत्येत आदेशा भवंति ॥ वो धणं । तुज्झाणं तुम्हाणं धणं ॥

॥ ङौ तुमम्मि ॥ ३८ ॥

युष्मदः पदस्य ङौ परतः तुमम्मि इत्यादेशो भवति ॥ तुमम्मि ठिअं ॥ पूर्वोक्ताश्च तइप्रभृतयश्चत्वारो ऽप्यादेशा भवंति[50] ॥

॥ तुज्झेसु तुम्हेसु[51] सुपि ॥ ३९ ॥

युष्मदः पदस्य सप्तमीबहुवचने तुज्झेसु तुम्हेसु इत्येतावादेशौ भवतः ॥ तुज्झेसु ठिअं ॥

॥ अस्मदो हमहमहअं सौ ॥ ४० ॥

अस्मदः पदस्य सौ परतो हं अहं अहअं इत्येत आदेशा भवंति ॥ हं अहं अहअं करेमि ॥

[1] before, तुम्भेहिं, corrected in the margin ; only D म्ह for ह्म in the second form. 47 BD तत्तो तइत्तो, but B not so originally. 48 AW-इयः as a compound ; *cf.* s. 48. 49 So BDE ; A has वो भे तुझाणं तुम्माणं आमि ; W वो ते तुज्झाणं तुझाणमामि ; and similarly in the Comm. of each. 50 पूर्व—भवंति not in A ; *cf.* S. 30 51 So BDW ( and

॥ अहम्मिरमिच[52] ॥ ४१ ॥

अमि परतो ऽस्मदः पदस्य अहम्मि इत्ययमादेशो भवति। सौ च ॥ अहम्मि पेक्ख । अहम्मि करेमि ॥ मां प्रेक्षस्व । अहं करोमि ॥

॥ मं ममं ॥ ४२ ॥

अमीति वर्तते । अस्मदः पदस्य अमि परतो मं ममं इत्येतावादेशौ भवतः ॥ मं ममं पेक्ख ॥

॥ अम्हे जश्शसोः[53] ॥ ४३ ॥

अस्मदः पदस्य जश्शसोः परतः अम्हे इत्ययमादेशो भवति ॥ अम्हे आगदा । अम्हे पेक्ख ॥

॥ णो शसि[54] ॥ ४४ ॥

अस्मदः पदस्य शसि परतो णो इत्ययमादेशो भवति ॥ णो पेक्ख ॥ अस्मान् प्रेक्षस्व ॥

॥ ङसि मे ममाइ ॥ ४५ ॥

अस्मदः पदस्य ङसि परतो[55] मे ममाइ इत्येतावादेशौ भवतः ॥ मे कज्जं । ममाइ कज्जं ॥

॥ ङौच मइ मए ॥ ४६ ॥

अस्मदः पदस्य ङौ परतो मइ मए इत्येतावादेशौ भवतः। चकारात्तृतीयैकवचनेव ॥ मइ मए ठिअं । मइ मए कज्जं ॥

॥ अम्हेहिं भिसि ॥ ४७ ॥

probably C); A तुम्हेसु तुम्हेसु as in s. 37; A has तुमेसु in ex.
52 A अहमि in sût. and ex.; W reads the sût. अहम्मि अमि.
53 A leaf (sûtras 43—58) is here lost in A (cf. Lass. Inst., p. 330); C has the missing sûtras, but often corrupt.
54 BCDE णे; W णो; Hema-ch. gives as his sût. अम्हे अम्हो अम्ह णे शसा. 55 B ङसिदशो.

अस्मदः पदस्य भिसि अम्हेहिं इत्ययमादेशो भवति ॥ अम्हेहिं कअं ॥

॥ मत्तो मइत्तो[56] ममादो ममादु[57] ममाहि ङसौ ॥ ४८ ॥

अस्मदः पदस्य ङसौ परत एत आदेशा भवंति ॥ मत्तो गदो । मइत्तो । ममादो ममादु ममाहि गदो ॥

॥ अम्हाहिंतो अम्हासुंतो भ्यसि[58] ॥ ४९ ॥

अस्मदः पदस्य भ्यसि परत अम्हाहिंतो अम्हासुंतो इत्येतावादेशौ भवतः ॥ अम्हाहिंतो अम्हासुंतो गदो ॥

॥ मे मम मह मज्झ ङसि ॥ ५० ॥

अस्मदः पदस्य ङसि परत एत आदेशा भवंति ॥ मे धणं । मम मह मज्झ धणं ॥

॥ मज्झ णो[59] अम्ह अम्हाणमम्हे[60] आमि ॥ ५१ ॥

अस्मदः पदस्य आमि परत एत आदेशा भवंति ॥ मज्झ[61] णो अम्ह अम्हाणं अम्हे धणं ॥ अस्माकं धनं ॥

॥ ममम्मि ङौ ॥ ५२ ॥

अस्मदः पदस्य ङौ परतो ममम्मि इत्यादेशो भवति ॥ ममम्मि ठिअं ॥ पूर्वोक्तौ मइ मए इत्येतौच[62] ॥

॥ अम्हेसु सुपि[63] ॥ ५३ ॥

अस्मदः पदस्य सप्तमीबहुवचने सुपि परतः अम्हेसु इत्ययमादेशो भवति ॥ अम्हेसु ठिअं ॥

56 B ममत्तो. 57 B om. ; sútras 48, 49 desunt in C. 58 B अम्हेहिंतो अम्हेसुंतो. 59 W मज्झाणो' 60 BC om. अम्हे ; the Prák. Sanj. om: मज्झ and varies between णो and णे. 61 BC मज्झणो ( in one word ) ; W मज्झाणो ; E has no Comm ; only D मज्झ धणं णो धणं, which Hema-ch. confirms. 62 पूर्वे—तौच added from B ; cf. S. 46. 63 D अम्हेसुं.

॥ द्वेर्दो ॥ ५४ ॥

पदस्येति निवृत्तं । सुपीति वर्तते ॥ द्विशब्दस्य दो इत्ययमादेशो भवति सुपि परतः ॥ दोहिं । दोसु[64] ॥ द्वाभ्यां । द्वयोः ॥

॥ त्रेस्तिः[65] ॥ ५५ ॥

त्रिशब्दस्य सुपि परतः ति इत्यादेशो भवति ॥ तीहि[66] । तीसु[67] ॥ त्रिभिः । त्रिषु ॥

॥ तिण्णि[68] जश्शस्भ्यां ॥ ५६ ॥

त्रिशब्दस्य जश्शस्भ्यां सह तिण्णि इत्यादेशो भवति ॥ तिण्णि आगदा । तिण्णि पेक्ख ॥ त्रय आगताः । त्रीन्प्रेक्षस्व ॥

॥ द्वेर्दुवे दोण्णि वा ॥ ५७ ॥

द्विशब्दस्य जश्शस्भ्यां सह दुवे दोण्णि इत्येतावादेशौ भवतः ॥ दुवे कुणंति । दोण्णि कुणंति ॥ पक्षे दो कुणंति ॥ द्वौ कुरुतः ॥ दुवे पेक्ख । दोण्णि पेक्ख । पक्षे दो पेक्ख ॥ द्वौ प्रेक्षस्व ॥

॥ चतुरश्चत्तारो चत्तारि ॥ ५८ ॥

चतुर्शब्दस्य जश्शस्भ्यां सह चत्तारो[69] चत्तारि इत्येतावादेशौ भवतः ॥ चत्तारो चत्तारि पुरिसा कुणंति । चत्तारो चत्तारि पुरिसे पेक्ख[70] ॥

॥ एषामामो एहं[71] ॥ ५९ ॥

64 D दोसुं. 65 W ( and the *Práka. Sanj.* ) तैस्ती. 66 So W ; the other MSS. ति-. 67 So CW ; the others तिसु (D -सु). The Prák. Sanj., Sanksh. Sára, and Hema-ch. all have *i* ; *cf.* Lass., Inst., p. 102. 68 B तिन्न (*sic*) ; C तिण्ण : D तिण्णि ; E तिन्नि (*sic*) ; W तिण्णि ; *cf.* Lass., p. 319. 69 A recommences here ; *cf.* p. 55, note 2. 70 W adds भिसादो रेफतथरलोर्दैंषः । तेन पउर्हि etc. 71 A ह throughout.

एषां द्वित्रिचतुः शब्दानामामः स्थाने ण्हं प्रत्ययमादेशो भवति ॥ दोण्हं धणं। तिण्हं धणं। चतुण्हं[72] धणं ॥

॥ सुपो ऽदंतवत् ॥ ६० ॥

शेषः सुब्विधिरदंतवद्भवति[73]। अकारांताद्भिसो हिं इत्ययमादेश उक्त इकारोकारांतादपि भवति। अग्गीहिं वाऊहिं। एवं मालाहि णईहिं वहूहिं। अग्गिस्स वाउस्स। अग्गीदो। वाऊदो। अग्गीदु। वाऊदु। एवं दोहिं तीहिं[74] चऊहिं ॥

॥ न ङिङस्योरेदातौ ॥ ६१ ॥

इकारोकारांतानां[75] ङिङस्योरदंतवद् एकाराकारौ[76] न भवत.[77]। अग्गिम्मि वाउम्मि। अग्गीदो वाऊदो। अग्गीदु वाऊदु। अग्गीहि वाऊहि[78] ॥

॥ ए[79] भ्यसि ॥ ६२ ॥

नेत्यनुवर्तते। भ्यसि परत इकारोकारांतयोरदंतवदेत्वं न भवति ॥ अग्गीहिंतो वाऊहिंतो ॥ अग्गीसुंतो। वाऊसुंतो ॥

॥ द्विवचनस्य बहुवचनं ॥ ६३ ॥

सर्वासां विभक्तीनां सुपां तिङांच द्विवचनस्य बहुवचनं

72 ACDE चतुण्हं ; W चउण्हं , B om. and confuses the Comm. of ss. 59, 60. 73 So D ; A शेषेषु विधि-. 74 W तीहि ; the rest त्तिहिं ; *cf.* note 4, p. 57: *mox* W चऊहिं: A चहुहिं , BDE चउहिं , the other Gram. have *ú*. 75 A इकारोतात् ; B -ताना ; W इकाराद्यंतानां. 76 *cf.* v. 6, 9. 77 W added न to the sút., and, therefore, adds erroneously here चकाराद् भिमि च. 78 The MSS. have अग्गीहि. etc., the anusw. being optionally added or not by *S.* iv. 16. 79 ACDE (and the Prák. Sanj.) ए ; BW आ ; and similarly in the comm. ; *cf.* v. 12, and Lass., p. 310.

प्रयोक्तव्यं ॥ वृक्षौ । वच्छा ॥ वृक्षाभ्यां । वच्छेहिं । वच्छाहिंतो ॥ वृक्षयोः । वच्छाण । वच्छेसु ॥

तिङो यथा ॥ तिष्ठतः । चिट्ठंति ॥

॥ चतुर्थ्याः[80] षष्ठी ॥ ६४ ॥

चतुर्थीविभक्तेः स्थाने षष्ठीविभक्तिर्भवति ॥ वम्हणस्स[81] देहि । वम्हणाण देहि ॥ ब्राह्मणाय देहि । ब्राह्मणेभ्यो देहि ॥

॥ इति वररुचिकृते प्राकृतप्रकाशे सर्वनाम परिच्छेदः षष्ठः ॥

80 A चतुर्थी. 81 A बंभण- ; D बम- (but corrected in marg.).

## ॥ अथ सप्तमः परिच्छेदः ॥

॥ ततिपोरिदेतौ[1] ॥ १ ॥

त तिप् इत्येतयोरेकैकस्य स्थाने इत् एत् इत्येतावादेशौ भवतः ॥ पढइ[2] पढए । सहइ सहए ॥ पठति पठते । सहति सहते ॥

॥ थास्सिपोः[3] सि से ॥ २ ॥

थास् सिप् इत्येतयोरेकैकस्य[4] स्थाने सि से इत्येतावादेशौ भवतः ॥ पढसि पढसे । सहसि सहसे ॥

॥ इट्मिपोर्मिः[5] ॥ ३ ॥

इट् मिप् इत्येतयोः स्थाने मिर्भवति ॥ पढामि[6] । हसामि । सहामि ॥

॥ न्तिहेत्थामोमुमा[7] बहुषु ॥ ४ ॥

बहुषु वर्तमानानां तिङां स्थाने न्ति ह इत्था[8] मो मु म इत्येत आदेशा भवंति ॥ प्रथमपुरुषस्य । रमंति[9] । पढंति । हसंति ॥ मध्यमस्य ॥ रमह । हसह । पढित्था[10] ॥ उत्तमस्य ॥ पढामो[11] पढमु । पढम ॥

1 BD ते. 2 The MSS. often read पठ ; *cf.* ii., 24. 3 So MSS. ; it is reversed in the comm. of S. 5. 4 एकै- not in A. 5 A मि. 6 A पढमि, etc. 7 AW त्ति in sút. and 8 ABD इत्था श्रामो ; W इत्थ श्रमो ; Hema-ch. and the Prákṛita Sanj. have इत्था and मो, which seems better ; *cf.* S. 7; E has no comm. 9 The anusw. in these ex. erased in A ; W seems to have रमत्ति, etc. 10 ADE पढित्था ; B पढीत्था ; W पढित्थ *cf.* Lass., p. 336, and *infra.* sút. 17. 11 E पढमो ; *cf.* S. 31.

॥ अत ए मे ॥ ५ ॥

नित्यार्थं वचनं यतो विशेषणं। ततिपोः सिप्थासोर् ए से इत्यादेशावत एव परौ भवत[12]। नान्यस्मात्॥ ततिपोः। रमए पढए॥ सिप्थासोः। रमसे पढसे॥ अत इति किं। होइ। भवति॥

॥ अस्तेर्लोपः[13] ॥ ६ ॥

*अस्तेर्धातोः थास्सिपोरादेशयोः परतो[14] लोपो भवति॥*

सुतो[15] सि। पुरिसो सि॥ सुप्तो ऽसि। पुरुषो ऽसि॥

॥ [16]मिमोमुमानामधोहश्च[17] ॥ ७ ॥

मिमोमुमानामस्तेः परेषामधो हकारः प्रयोक्तव्यः। अस्तेश्च लोपः॥ गओ म्हि। गअ म्हो। गअ म्हु। गअ म्ह[18]॥ गतो ऽस्मि। गताः स्मः॥

॥ यक ईअइज्जौ ॥ ८ ॥

यकः स्थाने ईअ इज्ज इत्यादेशौ भवतः॥ पढीअइ पढिज्जइ। सहीअइ सहिज्जइ॥ पठ्यते। सह्यते॥

॥ नांत्यद्वित्वे ॥ ९ ॥

धातोरंत्यद्वित्वे सति यक ईअ इज्ज इत्यादेशौ न भवतः॥ हस्सइ। गम्मइ॥ गम्यते। हस्यते॥ गमादीनां विकल्पेन द्वित्वविधानात्[19]। द्वित्वविधान उक्तावादेशौ न भवतः। द्वित्वा-

12 नित्य—भवत: from BD; A is obscure here; *cf.* SS. 1, 2, and Lass. Inst., p. 336; B has यावत् for यतो, and both have तेतिपोः, as in S. 1. W for '*nityartham-viśeṣaṇam*' has '*niyamartham vachanam*'. 13 A अस्तेर्लपः. 14 E परयोः; A अस्तेर्धातोः परतः थास्सिपोर्लोपः. 15 A सुणो. 16 A om. मु in sút. and comm. 17 W मध्ये in sút. and comm.; B *n. l.* 18 A gives the plur. ex. गआ म्ह गओ म्ह; B has गओ throughout; W adds *samyogapúrvo hrasvah*; *cf.* iv. 1, note. 19 *cf.* viii., 58; A merely quotes the sút.; the

विधाने तु भवत एव ॥ गमीअइ । गमिज्जइ ॥

॥ न्तमाणौ[20] शतृशानचोः ॥ १० ॥

शतृ शानच् इत्येतयोरेकैकस्य न्त माण इत्येतावादेशौ भवतः ॥ पढंतो । पढमाणो । हसंतो[21] । हसमाणो ॥

॥ ईच[22] स्त्रियां ॥ ११ ॥

स्त्रियां वर्तमानयोः शतृशानचोरीकारादेशो भवति । न्तमाणौ च ॥ हसई । हसंती । हसमाणा ॥ वेवई । वेवंती । वेवमाणा ॥

॥ धातोर्भविष्यति हिः[23] ॥ १२ ॥

भविष्यति काले धातोः परो हिशब्दः प्रयोक्तव्यः ॥ होहिइ । हसिहिइ[24] ॥ होहिंति । हसिहिंति ॥ भविष्यति । हसिष्यति । भविष्यंति । हसिष्यंति ॥

॥ उत्तमे स्सा हा च ॥ १३ ॥

भविष्यत्युत्तमे स्सा हा इत्येतौ प्रयोक्तव्यौ । चकाराद् हिश्च ॥ होस्सामि । होहामि । होहिमि । होस्सामो । होहामो । होहिमो[25] । इत्यादि ॥ भविष्यामि । भविष्यामः ॥

॥ मिना[26] स्सं वा ॥ १४ ॥

भविष्यत्युत्तमे मिना सह धातोः परः स्संशब्दः प्रयोक्तव्यो वा ॥ होस्सं । पक्षे होस्सामि । होहामि । होहिमि[27] ॥

rest is given from BD; W absurdly makes a new sútra of it, besides having it in Sect. viii. 20 DE त for न्त throughout. 21 The MSS. vary between सह and हस. 22 DW ईच ; A इत् ; B इच ; all have ई in the ex.. 23 AD हि. 24 होहोइ हसिहोइ. 25 BDW add the pl. forms in म and मु, हस्सामु etc. 26 W मिणा. 27 D adds हसिस्सं etc.

[ ॥ मोमुमैर्हिस्साहित्था[28] ॥ १५ ॥ ]

भविष्यति काल उत्तमे बहुवचनादेशस्य मो मु म इत्येतैः सह हिस्सा हित्था इत्येतावादेशौ वा[29] भवतः ॥ होहिस्सा होहित्था । हसिहिस्सा हसिहित्था ॥ भविष्यामः । हसिष्यामः ॥ पक्षे । होहिमो । होस्सामो[30] । होहामो । हसिहिमो[31] । हसिस्सामो । हसिहामो । एवं मुमयोरपि[32] । इत्यादि ॥

[ ॥ [33]कृदाश्रुवचिगमिरुदिदृशिविदिरूपाणां काहं दाहं सोच्छं वोच्छं[34] गच्छं रोच्छं[35] दच्छं वेच्छं ॥ १६ ॥ ]

भविष्यति काल उत्तमैकवचने कृञादीनां स्थाने यथासंख्यं काहं प्रभृतय आदेशा भवंति ॥ कहं करिष्यामि । दाहं दास्यामि । सोच्छं श्रोष्यामि । वोच्छं वक्ष्यामि । गच्छं गमिष्यामि । रोच्छं रोदिष्यामि । दच्छं द्रक्ष्यामि । वेच्छं वेत्स्यामि इत्यादि[36] ॥

[ श्रुवादीनां त्रिष्वप्यनुस्वारवर्जं[37] हिलोपश्च वा ॥ १७ ॥ ]

श्रु इत्येवमादीनां प्रथममध्यमोत्तमेषु त्रिष्वपि पुरुषेषु परतो भविष्यति काले सोच्छं इत्यादय आदेशा भवंति । अनुस्वारं विहाय । हिलोपश्च वा ॥

सोच्छिइ सोच्छिहिइ । श्रोष्यति ॥ सोच्छिंति । सोच्छिहिंति । श्रोष्यंति ॥ सोच्छिसि सोच्छिहिसि । श्रोष्यसि ॥ सोच्छित्था । सोच्छिहित्था[38] । श्रोष्यथ ॥ सोच्छिमि । सोच्छिहिमि । श्रोष्यामि ॥

28 sûtras 15—22 are only found in BDEW ; for sút. 15, *cf*. Lass. Inst.. p. 353. 29 BW om. 30 B होहिस्सामो (?). 31 DW om. 32 B gives these in full. 33 *cf*. Lass. p. 351 for this sút. 34 B सोत्य॰ वोत्य॰ ; the other MSS. prefer छ. 35 So W; BDE दच्छं. 36 W adds रूपमहणादन्यत्रापि । यथा मोच्छं पेच्छं । मोक्ष्यामि प्रेक्ष्यामि. 37 W om. ऽपि ; for sút., *cf*. Lass., p. 353. 38 So BW; DE -त्थ in both ex. ; *cf*. vii. 4.

सोच्छिमो। सोच्छिहिमो। सोच्छिमु। सोच्छिहिमु। सोच्छिम। सोच्छिहिम। सोच्छिस्सामो। सोच्छिस्सामु। सोच्छिस्साम[39] ॥ श्रोष्यामः ॥ एवं वोच्छादिरपि ॥

[ ॥ उसुमु[40] विध्यादिस्वेकस्मिन् ॥ १८ ॥ ]

विध्यादिस्वेकस्मिन्नुत्पन्नस्य प्रत्ययस्य यथासंख्यं उ सु मु इत्येत आदेशा भवंति[41] ॥ हसउ। हससु। हसमु[42] ॥ हसतु। हस। हसानि ॥

[ ॥ न्तुहमो[43] बहुषु ॥ १९ ॥ ]

विध्यादिषु बहुषूत्पन्नस्य प्रत्ययस्य यथासंख्यं न्तु ह मो इत्येत आदेशा भवंति ॥ हसंतु[44]। हसह। हसामो[45] ॥

॥ वर्तमानभविष्यदनद्यतनयोर्ज्जज्जा[46] वा ॥ २० ॥

वर्तमाने भविष्यदनद्यतने विध्यादिषु[47] चोत्पन्नस्य प्रत्ययस्य ज्ज ज्जा इत्येतावादेशौ वा भवतः। पक्षे यथाप्राप्तं। वर्तमाने तावत्। होज्ज होज्जा। हसेज्ज हसेज्जा। पक्षे होइ हसइ[48] ॥ भविष्यदनद्यतने। होज्ज होज्जा। पक्षे होहिइ इत्यादि ॥ विध्यादिष्वेवं[49] ॥

39 W adds सोच्छिहामो -मु -म सोच्छिस्सा सोच्छिहित्था वोच्छिहिस्सा ; the Comm. in B is corrupt, but seems = W ; both further add *vocbha* at full length. 40 W उहिसु. 41 E adds लिङनुवर्तते. 42 DE add वेच्छउ -सु -मु ; W's ex. are होउ हसउ। होहि हसहि। होसु हसमु, the last two = भवानि हसानि. It then adds आदिग्रहणादामंत्रणादयो ग्राह्याः ; B adds a very long Comm. applying these forms at full length to the potent. 1st and 3rd pret, 1st fut. and bened. 43 W हु-. 44 W हसडु. 45 W हसमो. 46 Only W has -तनयोश्च ज्ज- ; E has throughout *adya* for *anadya* ; *cf*. Lass. pp. 357, 358. 47 W adds चकारात् here. 48 BW add एवं पुरुषत्रये ऽपि एकवचनबहुवचनरूपाणि बोद्धव्यानि which Hema-ch. also seems to allow. 49 So E ; D om. ; BW add as ex, होज्ज होज्जा। करेज्ज करेज्जा। with

[ ॥ मध्येच[50] ॥ २१ ॥

वर्तमानभविष्यदनद्यतनयोर्विध्यादिषु च धातुप्रत्यययोर्मध्ये ज्ज ज्जा इत्येतावादेशौ वा भवतः[51] ॥ वर्तमाने। होज्जइ होज्जाइ। पक्षे यथाप्राप्त[52]। विध्यादिषु। होज्जउ होज्जाउ[53]। भवेदित्यादि[54] ॥

[ ॥ नानेकाचः[55] ॥ २२ ॥ ]

वर्तमानभविष्यदनद्यतनयोर्विध्यादिषु चानेकाचो धातोः प्रत्यये परे मध्ये ज्ज ज्जा इत्येतावादेशौ न भवतः किंत्वंतः एव भवतः ॥ हसइ तुवरइ ॥ अंते यथा हसेज्ज[56] हसेज्जा तुवरेज्ज[57] तुवरेज्जा। एवमन्येऽप्युदाहर्तव्याः[58] ॥

॥ ईअ भूते[59] ॥ २३ ॥

the following Sans. expl भवेत् कुर्यात् कुर्वीत भवतु भवतात् करोतु कुरुतात् अभवत् अकरोत् अकुरुत बभूव चकार चक्रे इत्यादि।; Hema ch in his corresponding sút. agrees with DE, but adds *anye tu anyásám apichchanti; hojja, bbavati, bhavet, bhavatu, abbavat, abhút, babhuva, bhuyát bhavitá bhavisyati abhavisyadvā ityarthah.* 50 DE मध्यमे च. 51 E gives ex. without Comm. 52 Only W adds भविष्यति होज्जल-इ 53 DE om. 54 W भवतु, B adds भवेत् भवतु etc, as in s 20 55 D ( not E ) om. this sút, and much of Comm, but it is supplied in margin. 56 D हसिज्ज, E has इ for *e* in all 57 D तुवरिज्ज. 58 BW om. and add पढेज्ज-ज्जा। करेज्ज-ज्जा 59 ADE इअ, B ईअ. W has three sutras ईअ भूते ॥ भूते वर्तमानाद्धातो प्रत्ययस्य ईअ आदेश स्यात् ॥ आसीअ। गेहीअ। हसीअ। पढीअ ॥ आसीत्। अग्रहीत्। अहसत्। अपठत्। इत्यादि। पुरुषत्रयरूपाणि एकवचनबहूवचनरूपाणि च बोद्धव्यानि, then follow एगाचो हीअ ॥ (s 24) and इअ भूते ॥ भूते काले धातो. प्रत्ययस्य इअ इत्यादेश। भाविअ हविअं

भूते काले धातोः प्रत्ययस्य ईअ इत्ययमादेशो भवति ॥ हुवीअ हसीअ[60] ॥ अभवत् । अहसत् ॥

॥ एकाचो हीअ[61] ॥ २४ ॥

भूते काल एकाचो धातोः प्रत्ययस्य हीअ इत्ययमादेशो भवति ॥ होहीअ[62] ॥ अभूत[63] ॥

॥ अस्तेरासिः[64] ॥ २५ ॥

अस्तेर्भूते काल एकस्मिन्नर्थे आसि इति निपात्यते ॥ आसि राआ । आसि वहू ॥ आसीद्राजा । आसद्वधूः ॥

॥ णिच एदादेरत आत् ॥ २६ ॥

णिच् प्रत्ययस्य एकारादेशो भवति । धातोरादेरकारस्य च आत्वं भवति ॥ कारेइ । हासेइ । पाढेइ ॥ कारयति । हासयति । पाठयति ॥

॥ आवे च ॥ २७ ॥

णिच आवे इत्ययमादेशो भवति । चकारात् पूर्वोक्तंच[65] ॥ करावेइ[66] ।

पढिअं । भासितं हसितं पठितं (W in fact gives the var. readings of *one* sút. as two); the copyists add anusw. wrongly, as if the rule applied to the past participle (for which *vide* s. 32), *cf.* Lass., p. 354; Hema-ch., the Pr. Sanj., and the Sanksh. Sára read ईअ. The Pr. Sanj. adds in Comm., *sarvesu purusesu sarvesu vachanesu*, and expl. *bhúta* by लुङ् लङ् and लिट्. 60 ADE भविअं हसिअं; B हुविअं (*cf.* viii., 1) करीअं हसोअं ।; none give Sans. expl.; the Pr. Sanj. हुवीअ. 61 A हिअ in sút., but हीअ in Comm.; BDE हीअं; W (and the Pr. Sanj.) हीअ; *cf.* Lass., p. 354. 62 W adds काहीअ एदाहीअ । चकार अदात्. Only in W; W then adds a new sút., ल्यप् कारे हीअ; see App. 64 A only आसी. 65 W एत्वं. 66 B कारा-; all the ex. in W have *á*

हसावेइ । पढावेइ[67] । करावेइ[68] इत्यादि ॥

॥ आविः क्तकर्मभावेषु वा ॥ २८ ॥

णिच आविरादेशो भवति वा क्तप्रत्यये परतो भावकर्मणोश्च ॥ काराविअं[69] हसाविअं पढाविअं । कारिअं हासिअं पाढिअं ॥ भावकर्मणोश्च कराविज्जइ । हसाविज्जइ । पढाविज्जइ । कारिज्जइ । हासिज्जइ । पाढिज्जइ ॥ कारितं । हासितं । पाठितं । कार्यते । हास्यते । पाठ्यते ॥

[ नैदावे[70] ॥ २९ ॥ ]

क्तभावकर्मसु णिच्प्रत्ययस्य एत् आवे इत्येतावादेशौ न भवतः ॥ कारिअं । कराविअं[71] । कारिज्जइ । कराविज्जइ[72] ॥

॥ अत आ मिपि वा ॥ ३० ॥

अकारांताद्धातोर् मिपि परत आकारादेशो भवति वा ॥ हसामि । हसमि ॥

॥ इच्च बहुषु ॥ ३१ ॥

मिपो बहुषु परतो ऽत इकारादेशो भवति। चकारादाकारश्च[73] ॥ हसिमो । हसामो । हसिमु । हसामु[74] ॥

॥ क्ते ॥ ३२ ॥

क्तप्रत्यये परतो ऽत इर्भवति ॥ हसिअं । पढिअं ॥

॥ एच्च[75] क्त्वातुमुन्तव्यभविष्यत्सु ॥ ३३ ॥

क्त्वा तुमुन् तव्य इत्येतेषु भविष्यति काले च अत एत्वं भवति ।

67 B पटे-. 68 BD om. 69 W का-, and similarly *á* in all the ex. 70 This *sút.* not in AC; B has it, but corrupt; W reads एनावे ; DE as above ( E adds क्तभाव- in *sút.* ); the MSS. agree in Comm. ; *cf.* Lass. pp. 360, 363. 71 EW काराविअं but कराविज्जइ. 72 BW add the forms of पढ and हस. 73 AD आच. 74 BW add हसिम हसाम. 75 BW एच.

चकारादिश्च ॥ हसेऊण हसिऊण[76]। हसेउं हसिउं। हसेअव्वं हसिअव्वं[77]। हसेहिइ हसिहिइ ॥

॥ लादेशे वा ॥ ३४ ॥

लकारादेशे परतो ऽत् एत्वं भवति वा ॥ हसइ हसइ। पढेइ पढइ। हसेंति हसंति। हसेउ हसउ ॥

इति वररुचिकृते प्राकृतप्रकाशे तिङ्विधिर्नाम सप्तमः परिच्छेदः ॥

76 AB -उण ; *cf.* IV., 24. 77 W हसेव्वं हसिव्वं.

## ॥ अथाष्टमः परिच्छेदः ॥

॥ भुवो होहुवौ ॥ १ ॥

भू सत्तायां। एतस्य धातोर्हो हुव इत्येतावादेशौ भवतः ॥ होइ हुवइ। होंति हुवंति[1] ॥

॥ क्ते हुः[2] ॥ २ ॥

भुवः क्तप्रत्यये परतो हु इत्यादेशो भवति ॥ हुअं[3] ॥

॥ प्रादेर्भवः ॥ ३ ॥

प्रादेरुत्तरस्य भुवो भव इत्ययमादेशो भवति ॥ पभवइ। उब्भवइ। संभवइ। परिभवइ ॥

॥ त्वरस्तुवरः ॥ ४ ॥

ञित्वरा संभ्रमे। अस्य धातोस्तुवर इत्ययमादेशो भवति ॥ तुवरइ ॥

॥ क्ते तुरः ॥ ५ ॥

क्तप्रत्यये तुर इत्ययमादेशो भवति ॥ तुरिअं ॥

॥ घुणो[4] घोलः ॥ ६ ॥

घुणघूर्ण[5] भ्रमणे। अस्य धातोर्घोल इत्ययमादेशो भवति ॥ घोलइ ॥

॥ णुनो णाहुः[6] ॥ ७ ॥

1 BW add several more ex., B corrupt ; W होहिइ होउ etc. 2 A ह BD हु ; W हु·, the Pr. Sanj. हु. 3 BD हुअं. 4 A घोणो ; D घूर्णो 5 A घुण घर्ण. 6 D for this जुदो सोदः ॥ जुद प्रेरणे अस्य धातोर्जुद इत्यादेशो भवति। सोदइ पसोदइ, E जुदेर्सोदः with ex. सोदइ पसोदइ ; B has both sút. confused ; W has

णुद प्रेरणे। अस्य धातोर्णोल्ल इत्ययमादेशो भवति ॥ णोल्लइ। पणोल्लइ ॥

॥ दूङो दूमः ॥ ८ ॥

दूङ् परितापे। अस्य धातोर्दूमादेशो भवति ॥ दूमइ[7] ॥

॥ पटेः फलः ॥ ९ ॥

अटपटगतौ[8]। अस्य धातोः फल इत्ययमादेशो भवति ॥ फलिअं[9] हिअअं ॥

॥ पदेः[10] पालः ॥ १० ॥

पद गतौ। अस्य धातोः पाल इत्ययमादेशो भवति ॥ पालेइ[11]।

॥ वृषकृषमृषहृषामृतो ऽरिः ॥ ११ ॥

वृषादीनामृतः स्थान अरि इत्यादेशो भवति ॥ वरिसइ। करिसइ। मरिसइ। हरिसइ ॥

॥ ऋतो ऽरः ॥ १२ ॥

ऋकारांतस्य धातोर्ऋतः स्थान अर इत्यादेशो भवति ॥ मृ। मरइ ॥ सृ। सरइ ॥ वृ। वरइ ॥

॥ कृञः कुणो वा ॥ १३ ॥

डुकृञ् करणे। अस्य धातोः प्रयोगे कुणो वा भवति ॥ कुणइ। करइ ॥

first णुदी णोलः with ex. णोलइ णोल्लइ। गमादित्वाद्द्वित्वं ; then नुदो ल्लोण· with ex. ल्लोणइ पल्लोणइ ; the Sanksh. S. (in Delius) has णुद् णोल्लण ; the Pr. Sanj. as in text 7 B adds दुम्मेइ. 8 A (not C) अट परिगतौ ; B पटगतौ. 9 BW फलइ ; W om. हिअअं. 10 D पदः ; this sūt. is supplied in marg. of A, but is in the text of C. 11 BW add पालइ.

॥ जृभो[12] जंभाअः ॥ १४ ॥

जभ जृभी[13] गात्रविनामे। अस्य धातोर्जंभाअ इत्ययमादेशो भवति ॥ जंभाअइ[14] ॥

॥ ग्रहेर्गेण्हः ॥ १५ ॥

ग्रह उपादाने। अस्य धातोर्गेण्हो भवति ॥ गेण्हइ ॥

॥ घेत्[15] त्क्वातुमुन्तव्येषु ॥ १६ ॥

ग्रहेर्घेत् इत्ययमादेशो भवति क्त्वातुमुन्तव्येषु परतः ॥ घेत्तूण[16]। घेत्तुं। घेत्तव्वं ॥

॥ कृञः का भूतभविष्यतोश्च ॥ १७ ॥

भूतभविष्यतोः कालयोः कृञः का इत्ययमादेशो भवति। चकारात् क्त्वातुमुन्तव्येषु परतः ॥ काहीअ[17] काहिइ[18]। काऊण। काउं। काअव्वं ॥

॥ स्मरतेर्भरसुमरौ[19] ॥ १८ ॥

स्मृ चिंतायां। अस्य धातोर्भरसुमरौ भवतः ॥ भरइ। सुमरइ ॥

12 W जृंभो; B reads the sút. जृंभो जंभालः. 13 So D; A om. जभ; B जभि जृंभि; W जभीजृभि; *cf.* Westerg., sect. 10,29. 14 B जंभालइ. 15 W घेत्; the others घे (the Pr. Sanj. घेत्त) and so in Comm. *Qy.* घेत्त् (?) *cf.* iv., 23. 16 In the ex. ABCW have त्त (B once घेऊण; *cf.* iv. 23); DE त, as घेतूण etc.; *cf.* Mrich. Stenz., p. 22, 8. 17 A काहिअं; B कारिअ; D काहिअ (altered to काहीअं) EW काहीअं; W explains it by कृतं, but *cf.* note to vii., 24, where W gives काहीअ as an ex.=चकार; the other MSS. have no Sans. expl. 18 E काहिइं (and so D, but altered). 19 All the MSS. and the Sanksh. Sára (*cf.* Delius, p. 11, note) भर; A has सुमर also, but orig. सुमर like the rest.

॥ भियो[20] भावीहौ ॥ १९ ॥

ञिभी भये। अस्य धातोर्भावीहौ भवतः ॥ भाइ। वीहइ ॥

[ ॥ जिघ्रतेः पापाऔ[21] ॥ २० ॥ ]

घ्रा गंधग्रहणे। अस्य धातोः पा पाअ इत्यादेशौ भवतः ॥ पाइ पाअइ ॥

॥ म्लै वावाऔ[22] ॥ २१ ॥

॥ म्लै गात्रविनामे[23]। अस्य धातोर्वावाऔ भवतः ॥ वाइ। वाअइ ॥

॥ तृपस्थिंपः ॥ २२ ॥

तृप तृंप तृप्तौ। अस्य धातोस्थिंपो भवति ॥ थिंपइ ॥

॥ ज्ञो जाणमुणौ[24] ॥ २३ ॥

ज्ञा अवबोधने। अस्य धातोर्जाणमुणौ भवतः ॥ जाणइ। मुणइ ॥

॥ जल्पेर्लो मः ॥ २४ ॥

जल्प व्यक्तायां वाचि। अस्य धातोर्लकारस्य मकारो भवति ॥ जंपइ ॥

॥ ष्ठाध्यागानां ठाअझाअगाआः[25] ॥ २५ ॥

ष्ठा गतिनिवृत्तौ। ध्यै चिंतायां। कै गै रै शब्दे। एतेषां ठाअ झाअ गाअ इत्येत आदेशा भवंति ॥ ठाअंति। झाअंति[26]। गाअंति ॥

[ ॥ ठाझागाश्च वर्तमानभविष्यद्विध्याद्येकवचनेषु[27] ॥ २६ ॥ ]

20 W भिणो. 21 This sút. not in AC; in DE it follows s. 21. 22 BW -वाअ. 23 W हर्षक्षये; *cf.* Westerg. sect. 22, 8. 24 A om.; B ज्ञा; for *muṇa*, *cf.* Lenz, App. Crit., p. 15. 25 Aw ज्झ (W झ्झ); E ज; the Pr. Sanj. झ; and so in Comm. of each; D य throughout in ss. 25, 26; B om. sút., but gives झ in Comm. 26 A झ; DEW as before; B om. 27 This sút. not in AC; W has only ठाझागाश्च; E for झ has य

ष्ठाध्यागानां ठा झा गा इत्यादेशा भवंति चकारात् पूर्वोक्ताश्च वर्तमानभविष्यद्विध्याद्येकवचनेषु परतः ॥ ठाइ ठाअइ। ठाहिइ ठाअहिइ। ठाउ ठाअउ ॥ झाइ झाअइ। झाहिइ झाअहिइ। झाउ झाअउ ॥ गाइ गाअइ। गाहिइ गाअहिइ। गाइ गाअइ ॥

[ ॥ खादिधाव्योः[28] खाधौ ॥ २७ ॥ ]

खादृ[29] भक्षणे। धावु[30] जवे[31]। एतयोर्धात्वोः खा धा इत्यादेशौ भवतः। वर्तमानभविष्यद्विध्याद्येकवचनेषु ॥ खाइ। खाहिइ। खाउ ॥ धाइ। धाहिइ। धाउ ॥

॥ ग्रसेर्विसः[32] ॥ २८ ॥

ग्रसु ग्लसु अदने। अस्य धातोर्विसो भवति ॥ विसइ ॥

॥ चिञश्चिणः ॥ २९ ॥

चिञ् चयने। अस्य धातोश्चिणो भवति ॥ चिणइ ॥

॥ क्रञः[33] किणः[34] ॥ ३० ॥

डुक्रीञ् द्रव्यविनिमये। अस्य धातोः किणो भवति ॥ किणइ ॥

॥ वेः क्के च[35] ॥ ३१ ॥

वेरुत्तरस्य क्रीञः क्के आदेशः किणादेशश्च भवति ॥ विक्केइ। विक्किणइ ॥

(like D). 28 This sút. not in AC; B खाइधाव्योः; W reads sút. खादधावलोः खा धा. 29 D खादि; W खाद; D om. भ-. 30 So W; B धाव; D धावि. 31 D om.; W गतिशुद्ध्योः 32 The MSS. *have* व्व (W व) here, but, as AB have व in Comm., and E's Bengálí व्व is clear, Delius' घ is probably incorrect (घ, व्व and व being so alike in MSS.): the MSS. have व्व in ex. (W व). 33 D क्रिय.. 34 A क्रि- throughout. 35 W वेः केणो वा ॥ with ex. विक्केणइ विक्किणइ; the Prák. Sanj. as in text.

॥ उद्ध्म[36] उद्धुमा ॥ ३२ ॥

ध्मा शब्दाग्निसंयोगयोः। अस्य धातोरुत्पूर्वस्य उद्धुमा भवति ॥ उद्धुमाइ[37] ॥

॥ श्रद्धो धो दहः ॥ ३३ ॥

श्रच्छब्दादुत्तरस्य डुधाञ् धारणपोषणयोः। अस्य धातोर्दहादेशो भवति ॥ सद्दहइ। सद्दहिअं ॥

॥ अवाद्गाहेर्वाहः[38] ॥ ३४ ॥

गाहू[39] विलोडने। अस्य धातोरवादुत्तरस्य वाहादेशो भवति ॥ ओवाहइ। अववाहइ ॥

॥ कासेर्वासः[40] ॥ ३५ ॥

अवादित्यनुवर्तते। कासृ शब्दकुत्सायां। अस्य धातोरवादुत्तरस्य वासो भवति ॥ ओवासइ। अववासइ ॥

॥ निरो माङो माणः[41] ॥ ३६ ॥

माङ् माने। अस्य धातोर्निरुत्तरस्य माणादेशो भवति। णिम्माणइ[42]।

॥ क्षियो[43] झिज्जः[44] ॥ ३७ ॥

क्षि क्षये। अस्य धातोर्झिज्जो भवति ॥ झिज्जइ ॥

॥ भिदिच्छिदोरंत्यस्य न्दः[45] ॥ ३८ ॥

भिदिर् छिदिर्। एधतोरंत्यस्य न्दो भवति ॥ भिंदइ। छिंदइ।

॥ क्रयेर्ढः[46] ॥ ३९ ॥

36 A उत्त ध्मा- ; C उद्ध्मा- ; W उद्ध्मो धुमा ; B corrupt ; for ध्मः cf. Pán., vi., 4. 140. 37 B उद्- ; W उद्धुमाइ. 38 B गाहे. 39 A गाधि ; B -हृ. 40 A कासे- in sûc., but not in Comm, 41 A म्माणः. 42 B णोमाणइ. 43 A क्षियो. 44 D झिज्ज throughout, to which A is altered from झि-. 45 B द: but न्द in ex.; AB चंतस्य for अंत-. 46 AW ढ, D originally so;

कथ निष्पाके। अस्य धातोरंत्यस्य ढो भवति ॥ कढइ ॥

॥ वेष्टेश्च[47] ॥४० ॥

वेष्ट वेष्टने। अस्य धातोरंत्यस्य ढो[48] भवति ॥ वेड्ढइ[49] ॥ योगविभाग[50] उत्तरार्थः ॥

॥ उत्समोर्लः[51] ॥ ४१ ॥

उत्संभ्यामुत्तरस्य वेष्टेरंत्यस्य लो भवति ॥ उव्वेल्लइ[52]। संवेल्लइ ॥

॥ रुदेर्वः ॥ ४२ ॥

रुदिर्। अस्य धातोरंत्यस्य वो भवति[53] ॥ रुवइ ॥

॥ उदो विजः ॥ ४३ ॥

उत्पूर्वस्य विजेरंत्यस्य[54] वकारो भवति ॥ उव्विवइ[55] ॥

॥ वृधेर्ढः[56] ॥ ४४ ॥

वृधु वर्धने। अस्य धातोरंत्यस्य ढो भवति ॥ वड्ढइ[57] ॥

॥ हंतेर्म्मः[58] ॥ ४५ ॥

हंतेरंत्यस्य[59] म्मो भवति ॥ हम्मइ ॥

॥ स्यादीनां दीर्घता[60] ॥ ४६ ॥

B ठ ; E द, but all have *kwather*. 47 AD वेष्टश्च. 48 Only B ठो ; E om. Comm. as usual. 49 The MSS. वेढइ ( B वेढइ, E वेदइ ) ; the doubling seems required by III., 51, and the clause योग-. 50 *cf.* III. 49. 51 ABW ह्रः here and in Comm. ; *cf.* III., 50. 52 BD उवे-. 53 W -कारो here and in SS. 43, 44, and elsewhere. 54 Only W ओविजी etc. 55 B उवीवइ. 56 AD वृधेर्ढ्ढः ( A is not clear, but the *r* proves that it is not ड्ढ ) ; W has ढः ; B वृधे ड्ढः. 57 The MSS. as before W वढ्ढइ ) *cf.* III., 51. 58 So MSS. ; *Qy.* मः (?) *cf.* Lass., p. 245, note. 59 W हन हिंसागत्योः—मकारो भवति। हिम्मइ। हंति. 60 In W this sút.

रुषादीनां दीर्घता भवति ॥ रूसइ । तूसइ । सूसइ[61] ॥ रुष्यति । तुष्यति । शुष्यति ॥

॥ च्चो[62] व्रजनृत्योः ॥ ४७ ॥

व्रज नृतो । अनयोरंत्यस्य च्चो भवति ॥ वच्चइ । णच्चइ ॥

॥ युधिबुध्योर्झः ॥ ४८ ॥

युध संप्रहारे । बुध अवगमने । अनयोरंत्यस्य झो[63] भवति ॥ जुज्झइ । बुज्झइ ॥

॥ रुधेर्न्धम्भौ[64] ॥ ४९ ॥

रुधिर् । अंत्यस्य न्धम्भौ भवतः ॥ रुन्धइ । रुम्भइ ॥

॥ मृदो लः ॥ ५० ॥

मृद क्षालने[65] । अस्य धातोरंत्यस्य लो भवति ॥ मलइ ॥

॥ शद्लृपत्लोर्डः[66] ॥ ५१ ॥

शद्लृ शातने पत्लृ पतने । अनयोरंत्यस्य डो भवति ॥ सडइ । पडइ ॥

॥ शकादीनां द्वित्वं ॥ ५२ ॥

शक्ल शक्तौ । इत्येवमादीनां द्वित्वं भवति ॥ सक्कइ । लग्गइ ॥ शक्नोति । लगति[67] ॥

॥ स्फुटिचल्योर्वा ॥ ५३ ॥

स्फुट विकसने । चल कंपने । अनयोरंत्यस्य वा द्वित्वं भवति ॥ फुट्टइ फुडइ[68] । चल्लइ चलइ ॥

follows S. 51 ; in Comm. BW add रुप रोपे etc. 61 W adds पूसइ=पुष्यति. 62 B throughout च्व (?) 63 W झ्भादेशो. 64 So ACW ; BDE read न्धस्सौ, with ex. रुस्सइ. 65 W क्षोदे. 66 W-पत्लोर्डः ; the *lr* is a later add. in BD, but the orig. text of AE ; the Pr. Sanj. has शदि-. 67 W adds गम्मइ । दुम्मइ=गच्छति । दूयते *cf.* var. lect. s. 8) and then gives s. 58. 68 A फट्टइ ; BDEW फुटइ ; the Pr. Sanj. फुडइ

॥ प्रादेर्मीलः ॥ ५४ ॥

प्रादेरुत्तरस्य मीलो ऽन्त्यस्य[69] द्वित्वं भवति वा ॥ पमिल्लइ[70] । पमीलइ ॥

॥ भुजादीनां क्त्वातुमुन्तव्येषु लोपः ॥ ५५ ॥

भुज[71] इत्येवमादीनां क्त्वातुमुन्तव्येषु परतो ऽन्त्यस्य लोपो भवति ॥ भोत्तूण[72] । भोत्तुं । भोत्तव्वं ॥ विदः । वेत्तूण । वेत्तुं । वेत्तव्वं ॥ रुदः । रोत्तूण । रोत्तुं । रोत्तव्वं ॥

॥ श्रुहुजिलूधुवां[73] णो ऽन्त्ये ह्रस्वः ॥ ५६ ॥

श्रु श्रवणे । हु दानादाने[74] । जि जये । लूञ्[75] छेदने । धूञ् कंपने । इत्येतेषामंत्ये णः प्रयोक्तव्यः । दीर्घस्य ह्रस्वो भवति ॥ सुणइ । हुणइ । जिणइ । लुणइ[76] । धुणइ ॥

॥ [77]भावकर्मणोर्व्वश्च[78] ॥ ५७ ॥

एषां भावकर्मणोरंत्ते व्वशब्दः[79] प्रयोक्तव्यः ॥ चकाराद् णश्च ॥ सुव्वइ सुणिज्जइ । हुव्वइ हुणिज्जइ । जिव्वइ जिणिज्जइ । लुव्वइ लुणिज्जइ । धुव्वइ धुणिज्जइ[80] ।

॥ गमादीनां[81] द्वित्वं वा ॥ ५८ ॥

quoting ii., 20. 69 So DW ; AB प्रादेरंत्यस्य मीलो ; E om. Comm. ; only W gives an ex. besides प्र. 70 D; ABE पमीलइ ; W पम्मिल्लइ पम्मिल्लइ । णिम्मीलइ णिम्मीलइ. 71 W adds चेति निवृत्तं. 72 W भोऊण । भोउं । भोअव्वं, but त्त in the other ex. ; DE have त in all the ex., cf. infra, transl. note. 73 W श्रुहुजिमधुवां णो ह्रस्वश्च (sic placed after s. 14 !). 74 BD -नयोः ; W दाने. 75 W लुङ् शब्दे. 76 W सुणइ=सपने. 77 W भावकर्मणोः as an adhikára with no ex. 78 A -वश्च ; D corrupt. 79 AB व- ; but only B व in the ex. 89 D om. both. 81 W puts this sút. after s. 52 with ex. गम्मइ रम्मइ दम्मइ गमइ रमइ दमइ explained by गच्छति रमते दमयति ; cf. vii., 9.

